अयकार वुस इत्यन्ये। प्लुष १२१६ दाहे। अप्लुषत्। पूर्वत्र पाठः सिजर्थं इत्याहुः। तद्भ्वादिपाठेन गतार्थमिति सुवचम्। बिस १२१७ प्रेरणे। बिस्यति। अबिसत्। कुस १२१८ संश्लेषणे। अकुसत्। बुस १२१९ उत्सर्गे। मुस १२२० खण्डने। मसी १२२१ परिणामे। परिणामो विकारः। समी इत्येके। लुठ १२२२ विलोडने। उच १२२३ समवाये। उच्यति। उवोच ऊचतुः। मा भवानुचत्। भृशु १२२४ भ्रंशु १२२५ अधःपतने। बभर्श। अभृशत्। 'अनिदिताम्–' ( सू ४१५ ) इति नलोपः। भ्रश्यति। अभ्रशत्। वृश १२२६ वरणे। वृश्यति। अवृशत्। कृश १२२७ तनूकरणे। कृश्यति। ञि तृषा १२२८ पिपासायाम्। हृष १२२९ तुष्टौ। श्यन्लुङौ भौवादिकाद्विशेषः। रुष १२३० रिष १२३१ हिंसायाम्। 'तीषसह–' ( सू २३४० ) इति वेट्। रोषिता–रोष्टा रेषिता–रेष्टा। डिप १२३२ क्षेपे। कुप १२३३ क्रोधे। गुप १२३४ व्याकुलत्वे। युप १२३५ रुप १२३६ लुप १२३७ विमोहने। युप्यति। रुप्यति। लुप्यति। लोपिता। लुप्यतिः सेट्कः। अनिट्कारिकासु लिपिसाहचर्यात्तौदादिकस्यैव ग्रहणात्। लुभ १२३८ गार्ध्ये। गार्ध्यमाकाङ्क्षा। 'तीषसह–' ( सू २३४० ) इति वेट्। लोभिता–लोब्धा। लोभिष्यति। लुभ्येत्। लुभ्यात्। अलुभत्। भ्वादेरवृत्करणाल्लोभतीत्यपीत्याहुः। क्षुभ १२३९ संचलने। क्षुभ्यति। णभ १२४० तुभ १२४१ हिंसायाम्। क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते। तेषां द्युतादित्वादङ् सिद्धः। क्र्यादित्वात्पक्षे सिज्भवत्येव। इह पाठस्तु श्यन्नर्थः।

---

**अयकारः इति**। दन्तोष्ठ्यादिर्दन्त्योष्मान्तो यो धातुरुक्तः स एवायं यकाररहित इत्यन्ये मन्यन्त इत्यर्थः। अयकारमिति पाठे क्रियाविशेषणम्। **प्लुष दाहे**। ननु दिवादिगणे परस्मैपदिषु पुषादिभ्यः प्राक् अस्य पाठः क्वचित् दृश्यते। तत्र पौनरुक्त्यशङ्कां परिहरति—**पूर्वत्र पाठः सिजर्थं इति**। पुषादावेव पाठे सति अङेव श्रूयेत नतु सिच्। पुषादेः प्रागपि पाठे तु तस्य अङभावात् सिच् श्रूयेत। तथाच सिचः कदाचित् श्रवणार्थः पूर्वं पाठ इत्यर्थः। आहुरित्यस्वरसोद्भावनम्। तद्बीजं दर्शयति—**तद्भ्वादीति**। तत् दिवादिगणे पुषादिभ्यः पूर्वमस्य पठनं भ्वादिपाठेनैव संपन्नप्रयोजनकमिति सुष्ठु वक्तुं शक्यमित्यर्थः। एवं च भ्वादिपाठात् शब्विकरणः लुङि सिचः श्रवणं च सिध्यति। पुषादौ पाठात्तु श्यन्विकरणः अङ् च सिध्यति। अतः दिवादिगणे पुषादिभ्यः प्रागस्य पाठो व्यर्थ एवेति भावः। एतदेवाभिप्रेत्य मूले दिवादिगणे पुषादिगणात् प्राक् प्लुष दाहे इति न पठितमिति बोध्यम्। **मसी परिणामे इति**। ईदित्त्वं 'श्वीदितः' इत्येतदर्थम्। मस्यति। **समी इत्येके इति**। सम्यति। **भृशु भ्रंशु अधःपतने**। द्वितीयधातोराह—**अनिदितामिति**। **युप रुप लुप विमोहने इति**। धातुवृत्त्यादिविरोधादुदित्पाठो लेखकप्रमादादायातः। **इह पाठस्त्विति**। क्षुभिनभितुभीनां इह दिवादिगणे पाठस्य श्यनेव प्रयोजन-

क्लिदू १२४२ आर्द्रीभावे। क्लिद्यति। चिक्लेदिथ-चिक्लेत्थ। चिक्लिदिव-चिक्लिद्व। चिक्लिदिम-चिक्लिद्म। क्लेदिता-क्लेत्ता। ञि मिदा १२४३ स्नेहने। 'मिदेर्गुणः' (सू २३४६)। मेद्यति, अमिदत्। द्युतादिपाठादेव अमिदत् अमेदिष्टेति सिद्धे इह पाठः अमेदीदिति मा भूदिति। द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचितः। ञि क्ष्विदा १२४४ स्नेहनमोचनयोः। ऋधु १२४५ वृद्धौ। आनर्ध। आर्धत्। गृधु १२४६ अभिकाङ्क्षायाम्। अगृधत्। वृत्। पुषादयो दिवादयश्च वृत्ताः। केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम्। दिवादिस्तु भ्वादिवदाकृतिगणः। तेन क्षीयते मृग्यतीत्यादिसिद्धिरित्याहुः।

इति तिङन्ते दिवादिप्रकरणम्।

---

# अथ तिङन्ते स्वादिप्रकरणम् ॥ ५ ॥

षुञ् १२४७ अभिषवे। अभिषवः स्नपनं पीडनं स्नानं सुरासन्धानं च। तत्र स्नाने अकर्मकः। (२५२३) **स्वादिभ्यः श्नुः। ३। १। ७३॥** सुनोति।

---

मित्यर्थः। वस्तुतस्तु पुषादेः प्रागेव एषां त्रयाणां पाठो युक्त इति भावः।

**ञि मिदा स्नेहने। अमिददिति**। ननु भ्वाद्यन्तर्गणे द्युतादौ 'ञि मिदा स्नेहने' इत्यात्मनेपदिषु पठितः। लुङि तु 'द्युद्भ्यो लुङि' इत्यत्र परस्मैपदविकल्पः उक्तः। द्युताद्यङ् तु परस्मैपद एव न तु तङि। एवं च द्युतादिपाठादेव परस्मैपदपक्षे अङि अमिददिति' तङि तु अङभावे अमेदिष्टेति सिद्धम्। तथाच पुषादावस्य पाठो व्यर्थः। तद्बहिर्दिवादौ पाठादेव श्यन्सिद्धेरित्याशङ्क्यते—**द्युतादिपाठादेवेत्यादिना सिद्धे इत्यन्तेन**। तामिमां शङ्कां परिहरति—**इह पाठः अमेदीदिति मा भूदितीति**। पुषादावस्य पाठः अमेदीदिति व्यावृत्त्यर्थ इत्यर्थः। पुषादिभ्यः प्रागेव दिवादावस्य पाठे तु तस्माल्लुङि अङसंभवादमेदीदिति स्यादिति भावः। नन्वेवं सति भ्वाद्यन्तर्गणे द्युतादावस्य पाठो व्यर्थः। द्युतादिभ्यो बहिरेवात्मनेपदिषु पठ्यताम्। एवं च अमेदिष्टेति सिद्धम्। इह पुषादौ पाठात्तु अमिददिति सिद्धमित्याशङ्कयेष्टापत्त्या परिहरति—**द्युतादिभ्यो बहिरेवात्मनेपदिषु पाठस्तूचित इति**। सूचितः इति पाठे तु सुतरामुचित इति व्याख्येयम्। **ञि क्ष्विदेत्यादि**। व्यक्तम्।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां श्यन्विकरणं समाप्तम्।

---

अथ श्नुविकरणा धातवो निरूप्यन्ते। षुञ्धातुः षोपदेशः। अनिट्। इत

सुनुतः । 'हुश्नुवोः—' ( सू २३८७ ) इति यण् । सुन्वन्ति । सुन्वः-सुनुवः । सुन्वहे-सुनुवहे । सुषाव । सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् । 'स्तुसुधूञ्भ्यः—' ( सू २३८९ ) इतीट्-असावीत् । असोष्ट । अभिषुणोति । अभ्यषुणोत् । अभिषुषाव । (२५२४) सुनोतेः स्यसनोः ।

---

आरभ्य ञित्त्वादुभयपदिनः । **सुरासंधानमिति** । सुरोत्पादनमित्यर्थः । **स्वादिभ्यः श्नुः** । कर्त्रर्थे सार्वधातुके स्वादिभ्यः श्नुः स्यादित्यर्थः । शपोऽपवादः । **सुनोतीति** । लटस्तिपि श्नुः, शकार इत् शित्त्वेन सार्वधातुकत्वात् 'सार्वधातुकमपित्' इति ङित्त्वात्तस्मिन् परे धातोर्न गुणः । श्नोस्तु तिपमाश्रित्य गुण इति भावः । **सुनुत इति** । तसो ङित्त्वात् श्नोर्न गुण इति भावः । सुनु अन्ति इति स्थिते 'अचि श्नुधातु' इति उवङमाशङ्क्य आह—**हुश्नुवोरिति** । सुनोषि सुनुथः सुनुथ । सुनोमि । वसि मसि च 'लोपश्चास्यान्यतरस्यां म्वोः' इत्युकारलोपविकल्पं मत्वा आह—**सुन्वः सुनुवः इति** । सुन्मः सुनुमः इत्यपि ज्ञेयम् । अथ लटस्तङि सुनुते सुन्वाते सुन्वते । सुनुषे सुन्वाथे सुनुध्वे । सुन्वे । इति सिद्धवत्कृत्य आह—**सुन्वहे सुनुवहे इति** । 'लोपश्चास्य' इत्युकारलोपविकल्प इति भावः । सुन्महे सुनुमहे इत्यपि ज्ञेयम् । **सुषावेति** । सुषुवतुः सुषुवुः । सुषविथ-सुषोथ सुषुवथुः सुषुव । सुषाव-सुषव सुषुविव सुषुविम । अथ लिटस्तङ्याह—**सुषुवे इति** । सुषुवाते सुषुविरे । सुषुविषे सुषुवाथे सुषुविध्वे । सुषुवे सुषुविवहे सुषुविमहे । **सोतेति** । अनिट्त्वसूचनमिदम् । सोष्यति सोष्यते ।

सुनोतु-सुनुतात् सुनुताम् सुन्वन्तु । इति सिद्धवत्कृत्य आह—**सुनु इति** । 'उतश्च प्रत्ययात्' इति हेर्लुक् । सुनुतात् सुनुतम् सुनुत । **सुनवानीति** । 'हुश्नुवोः' इति यणं बाधित्वा परत्वाद्गुणः, आटः पित्त्वेन अङित्त्वादिति भावः । सुनवाव सुनवाम । लोटस्तङि सुनुताम् सुन्वाताम् सुन्वताम् । सुनुष्व सुन्वाथाम् सुनुध्वम् । इति सिद्धवत्कृत्य आह—**सुनवै इति** । 'हुश्नुवोः' इति यणं बाधित्वा परत्वात् गुणः, आटः पित्त्वेन ङित्त्वाभावादिति भावः । सुनवावहै सुनवामहै । असुनोत् असुनुताम् असुन्वन् । असुनोः । असुनवम् असुनुव-असुन्व । असुनुत असुन्वाताम् असुन्वत । इत्याद्यूह्यम् । विधिलिङ्याह—**सुनुयादिति** । यासुटो ङित्त्वात् श्नोर्न गुण इति भावः । **सूयादिति** । आशीर्लिङि 'अकृत्सार्वधातुकयोः' इति दीर्घ इति भावः । सोषीष्ट । लुङि परस्मैपदे सिचः इण्निषेधे प्राप्ते आह—**स्तुसुधूञ्भ्यः इति इडिति** । असाविष्टामित्यादि । लुङस्तङ्याह—**असोष्टेति** । असोषातामित्यादि । असोष्यत् असोष्यत । 'उपसर्गात् सुनोति' इति षत्वं मत्वा आह—**अभिषुणोतीति** । षात्परत्वाण्णत्वम् । **अभ्यषुणोदिति** । 'प्राक् सितादड्व्यवायेऽपि' इति षत्वम् । **अभिषुषावेति** । 'स्थादिष्वभ्यासेन' इति नियमादभ्यासस्य न षः । 'आदेशप्रत्यययोः' इत्युत्तरखण्डस्य

८।३।११७॥ स्ये सनि च परे सुञः षो न स्यात् । विसोष्यति । षिञ् १२४८ बन्धने । सिनोति । विसिनोति । सिषाय । सिष्ये । सेता । शिञ् १२४६ निशाने । तालव्यादिः । शेता । डु मिञ् १२५० प्रक्षेपणे । 'मीनातिमिनोति—' ( सू २५०८ ) इत्यात्वम् । ममौ । ममिथ–ममाथ । मिम्ये । माता । मीयात् । मासीष्ट । अमासीत् अमासिष्टाम् । अमास्त । चिञ् १२५१ चयने । प्रणिचि-

---

षः । **सुनोतेः स्यसनोः** । ' अपदान्तस्य मूर्धन्यः ' इत्यधिकृतम् । ' न रपर ' इत्यतो नेत्यनुवर्तते । तदाह—**षो न स्यादिति** । स्ये उदाहरति—**विसोष्यतीति** । अत्र ' उपसर्गात् सुनोति ' इति प्राप्तः षो न भवति । सनि तु अभिसुसूरित्युदाहरणम् । षुञः सनि द्वित्वे अभिसुसूस इति सनन्तात् क्विपि अतो लोपे अभिसुसूस् इत्यस्मात् सोर्हल्ङ्यादिलोपे सस्य रुत्वे ' र्वोरुपधायाः ' इति दीर्घे रेफस्य विसर्गः । सुसूषति इति तु नोदाहरणम्, स्तौतिण्योरेव षण्यभ्यासात् ' इति नियमादेव षत्वाभावसिद्धेरित्यलम् ।

**षिञ् बन्धने इति** । षोपदेशः अनिट् च । षुञ इव रूपाणि । **विसिनोतीति** । ' सात्पदाद्योः ' इति षत्वनिषेधः । ' उपसर्गात्सुनोति ' इति तु न षः, सुनोत्यादिष्वनन्तर्भावादिति भावः । **सिषायेति** । णलि वृद्धौ आयादेशः । अतुसादौ ' एरनेकाचः ' इति यण् । सिष्यतुरित्यादि । लिटस्तङ्याह—**सिष्ये इति** । सिषि ए इति स्थिते ' एरनेकाचः ' इति यणिति भावः । सिष्याते सिष्यिरे इत्यादि । असैषीत् । **शिञ् निशाने इति** । षिञ्वत् । **डु मिञ् प्रक्षेपणे इति** । मिनोति । उपदेशे एजन्तत्वाभावादात्त्वे अप्राप्ते आह—**मीनातिमिनोतीत्यात्त्वमिति** । एज्विषये अशितीति शेषः । **ममाविति** । आत्त्वे कृते णलः औत्वमिति भावः । अतुसादावेज्विषयत्वाभावान्नात्त्वम् । ' एरनेकाचः ' इति यण् । मिम्यतुः । मिम्युः । भारद्वाजनियमात्थलि वेडिति मत्वा आह—**ममिथ ममाथेति** । थलः पित्त्वेन अकित्त्वादेज्विषयत्वम् । इट्पक्षे ' आतो लोपः ' इति भावः । मिम्यथुः मिम्य । ममौ मिमियिव मिमियिम । लिटस्तङ्याह—**मिम्ये इति** । एशः कित्त्वादेज्विषयत्वाभावाच्च नात्त्वमिति भावः । मिम्याते मिम्यिरे । मिम्यिषे मिम्याथे मिम्यिध्वे । मिम्ये मिम्यिवहे मिम्यिमहे । **मातेति** । एज्विषयत्वादशित्त्वाच्च आत्त्वमिति भावः । मास्यति मास्यते । सार्वधातुकेषु षुञ्वत् । **मीयादिति** । आशीर्लिङि परस्मैपदे यासुटः कित्त्वादेज्विषयत्वाभावादात्त्वाभावे ' अकृत्सार्व ' इति दीर्घ इति भावः । आशीर्लिङि तङि आह—**मासीष्टेति** । एज्विषयत्वादात्त्वमिति भावः । लुङि परस्मैपदे सिचि आत्त्वे ' यमरम ' इति सगिटौ मत्वा आह—**अमासीदिति** । सकि सिच इटि सिज्लोपः । **अमास्तेति** । लुङि तङि सिचि आत्त्वमिति भावः । अमासाताम् अमासत इत्यादि ।

नोति। (२५२५) **विभाषा चेः। ७। ३। ५८॥** अभ्यासात्परस्य चिञः कुत्वं वा स्यात्सनि लिटि च। *प्रणिचिकाय–चिचाय। चिक्ये–चिच्ये।* अचैषीत् अचेष्ट। स्तृञ् १२५२ आच्छादने। स्तृणोति। स्तृणुते। 'गुणोऽर्ति–' ( सू २३८० ) इति गुणः। स्तर्यात्। (२५२६) **ऋतश्च संयोगादेः।७।२।४३॥** ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि। स्तरिषीष्ट–स्तृषीष्ट। अस्तरिष्ट–अस्तृत। कृञ् १२५३ हिंसायाम्। कृणोति। कृणुते। चकार। चकर्थ। चक्रे। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत। वृञ् १२५४ वरणे। (२५२७) **बभूथाततन्थजगृभ्मववर्थेति निगमे। ७। २। ६४॥** एषां वेदे इडभावो निपात्यते। तेन भाषायां थलीट्। ववरिथ। वव्रृव। ववृवहे। वरिता–वरीता। (२५२८) **लिङ्सिचोरात्मनेपदेषु। ७। २। ४२॥** वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि। ( २५२९ ) **न लिङि। ७। २। ३९॥** वृतो लिङ इटो दीर्घो न स्यात्। वरिषीष्ट–वृषीष्ट। अवारीत्। अवरिष्ट–अव-

---

**चिञ् चयने इति**। चयनं रचना। अनिट्। सार्वधातुके घुन्वद्रूपाणि। **प्रणिचिनोतीति**। 'नेर्गद' इति णत्वमिति भावः। **विभाषा चेः**। 'चजोः कुघिण्ण्यतोः' इत्यतः कुग्रहणमनुवर्तते। 'अभ्यासाच्च' इत्यतः अभ्यासादिति 'सन्लिटोर्जेः' इत्यतः सन्लिटोरिति च। तदाह—**अभ्यासादित्यादिना। स्तृञ् आच्छादने इति**। अनिट्। लिटि तस्तार। अतुसादौ 'ऋतश्च संयोगादेर्गुणः' इति गुणः। वृद्धिविषयेऽपि परत्वादस्य प्रवृत्तिः। तस्तरतुः। ऋदन्तत्वात्थल्यपि नित्यं नेट्। तस्तर्थ। तस्तरिव। तस्तरे तस्तराते तस्तरिरे। तस्तरिषे। तस्तरिवहे। स्तर्ता। 'ऋद्धनोः स्ये' स्तरिष्यति। आशीर्लिङि परस्मैपदे यासुटः कित्त्वाद्गुणनिषेधे प्राप्ते आह—**गुणोऽर्तीति गुण इति**। तङि आशीर्लिङि स्तृ षीष्ट इति स्थिते—**ऋतश्च संयोगादेः**। 'लिङ्सिचोरात्मनेपदेषु' इत्यनुवर्तते। 'इट् सनि वा' इत्यतः इड्वेति। तदाह—**ऋदन्तादित्यादिना**। लुङि परस्मैपदे अस्तार्षीत्। लुङस्तङि त्वाह—**अस्तरिष्ट अस्तृतेति**। 'ऋतश्च संयोगादेः' इति इट्पक्षे गुणः। इडभावपक्षे तु 'ह्रस्वादङ्गात्' इति सिचो लोपः। **कृञ् हिंसायाम्। चकर्थेति**। 'कृसृभृवृ' इति थल्यपि नित्यमिण्निषेधः। चकृव। **क्रियादिति**। आशीर्लिङि 'रिङ् शयग्लिङ्क्षु' इति रिङ्। **कृषीष्टेति**। 'उश्च' इति कित्त्वान्न गुणः। **अकार्षीदिति**। सिचि वृद्धिः रपरत्वम्। **अकृतेति**। 'ह्रस्वादङ्गात्' इति सिचो लोपः।

**वृञ् वरणे**। सेट्। ववार। वव्रुः। **बभूथाततन्थ**। निगमो वेदः। तदाह—**एषां वेदे इति**। ननु 'कृसृभृवृ' इति निषेधादेव थलि ववर्थेति सिद्धे किमर्थं ववर्थग्रहणमित्यत आह—**तेन भाषायां थलीडिति**। निगमे एव वृणोतेस्थलि इण्निषेध इति नियमलाभादिति भावः। वव्रे वव्राते। वव्रृषे। 'वृतो वा' इति मत्वा आह—**वरिता वरीतेति। लिङ्सिचोः**। 'इट् सनि वा'

रीष्ट-अवृत। धुञ् १२५५ कम्पने। धुनोति। धुनुते। अधौषीत्। अधोष्यत्। दीर्घान्तोऽप्ययम्। धूनोति। धूनुते। 'स्वरतिसूति—' (सू २२७६) इति वेट्। दुधविथ-दुधोथ। किति लिटि तु 'श्र्युकः—' (सू २३८१) इति निषेधं बाधित्वा क्रादिनियमान्नित्यमिट्। दुधुविव। 'स्तुसुधूञ्भ्यः—' (सू २३८५) इति नित्यमिट्। अधावीत्। अधविष्ट-अधोष्ट।

अथ परस्मैपदिनः। टु दु १२५६ उपतापे। दुनोति। हि १२५७ गतौ वृद्धौ च। (२५३०) हिनुमीना। ८।४।१५॥ उपसर्गस्थान्निमित्तात्परस्य एतयोर्नस्य णः स्यात्। प्रहिणोति। (२५३१) हेरचङि। ७।३।५६॥ अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि। जिघाय। पृ १२५८ प्रीतौ। पृणोति। पर्ता। स्पृ १२५९ प्रीतिपालनयोः। 'प्रीतिचलनयोः' इत्यन्ये। 'चलनं जीवनम्' इति स्वामी। स्पृणोति। पस्पार। स्मृ इत्येके। स्मृणोति। पृणोत्यादयस्त्रयोऽपि छान्दसा इत्याहुः। आप्लृ १२६० व्याप्तौ। आप्नोति

इत्यतः इड्वा इत्यनुवर्तते। 'वृतो वा' इत्यतो वृत इति। तदाह—**वृङ्वृञ्भ्यामित्यादिना। न लिङि।** 'वृतो वा' इत्यतो वृत इत्यनुवर्तते। लिङीति षष्ठ्यर्थे सप्तमी। 'आर्धधातुकस्येट्' इत्यतः इडित्यनुवृत्तं षष्ठ्या विपरिणम्यते। 'ग्रहोऽलिटि' इत्यतो दीर्घ इत्यनुवर्तते। तदाह—**वृत इति।** वृङ्वृञ्भ्यामृकारान्ताच्चेत्यर्थः। **वरिषीष्टेति**। इट्पक्षे 'वृतो वा' इति प्राप्तो दीर्घो न भवति। **वृषीष्टेति**। इडभावपक्षे 'उश्च' इति कित्त्वान्न गुणः। **अवारीदिति**। लुङि परस्मैपदे सिचि वृद्धिः। अवारिष्टाम् अवारिषुः। 'सिचि च परस्मैपदेषु' इति निषेधादिह 'वृतो वा' इति न दीर्घः। लुङस्तङि सिचि 'लिङ्सिचोः' इति इट्पक्षे 'वृतो वा' इति दीर्घविकल्पं मत्वा आह-**अवरिष्ट अवरीष्टेति। अवृतेति**। इडभावपक्षे 'ह्रस्वादङ्गात्' इति सिचो लोपः। **धुञ् कम्पन इति**। ह्रस्वान्तोऽयमनिट्। षुञ इव रूपाणि। **दीर्घान्तोऽप्ययमित्यादि**। व्यक्तम्।

**अथ परस्मैपदिन इति**। राध साध संसिद्धावित्येतत्पर्यन्ता इत्यर्थः। 'टु दु उपतापे' इत्यारभ्य 'स्मृ इत्येके' इत्येतत्पर्यन्ता धातवो ह्रस्वान्ताः। **हि गताविति**। प्रहिणोतीत्यत्र भिन्नपदत्वात् णत्वेऽप्राप्ते आह—**हिनुमीना**। हिनु मीना अनयोर्द्वन्द्वात्षष्ठीद्विवचनस्य आर्षो लुक्। 'रषाभ्यां नो णः' इत्यनुवर्तते। 'उपसर्गादसमासेऽपि' इत्यत उपसर्गादिति च। तदाह—**उपसर्गस्थादिति। हेरचङि**। 'चजोः' इति सूत्रात् कुग्रहणमनुवर्तते। 'अभ्यासाच्च' इत्यतः अभ्यासादिति। 'हो हन्तेः' इत्यतः ह इति षष्ठ्यन्तमनुवर्तते। तदाह—**अभ्यासात्परस्येति। जिघायेति**। जिघ्यतुः। जिघयिथ-जिघेथ। जिघ्यिव। **आप्लृ व्याप्तौ**।

१ ऋतुसादौ 'परस्परतुः' इत्यादि 'ऋतश्च संयोगादेर्गुणः' इति गुणः।

आप्नुतः आप्नुवन्ति । आप्नुवः । आप्ता । आप्नुहि । लृदित्त्वादङ् । आपत् । शक्लृ १२६१ शक्तौ । अशकत् । राध १२६२ साध १२६३ संसिद्धौ । राध्नोति । (२५३२) राधो हिंसायाम् । ६ । ४ । १२३ ॥ एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । अपरेधतुः । रेधुः । रेधिथ । राद्धा । साध्नोति । साद्धा । असात्सीत् असाद्धाम् ।

अथ द्वावनुदात्तेतौ । अशू १२६४ व्याप्तौ संघाते च । अश्नुते । (२५३३) अश्नोतेश्च । ७ । ४ । ७२ ॥ दीर्घादभ्यासावर्णात्परस्य नुट् स्यात् । आनशे । अशिता–अष्टा । अशिष्यते–अक्ष्यते । अश्नुवीत । अक्षीष्ट–अशिषीष्ट । आशिष्ट–आष्ट आक्षाताम् । ष्टिघ १२६५ आस्कन्दने । स्तिघ्नुते । तिष्टिघे । स्तेघिता ।

अथ आ गणान्तात्परस्मैपदिनः । तिक १२६६ तिग १२६७ गतौ च । चादास्कन्दने । तिक्नोति । तिग्नोति । षघ १२६८ हिंसायाम् । सघ्नोति । ञि धृषा १२६९ प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता । दम्भु १२७० दम्भने । दम्भनं दम्भः । दभ्नोति । ददम्भ । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा' इति व्याकरणान्तरमिहाप्याश्रीयत इत्युक्तम् । 'अनिदिताम्—' ( सू ४१५ ) इति नलोपः । तस्याभीयत्वादसिद्धत्वेन एत्वाभ्यासलोपयोरप्राप्तौ 'दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ' ( वा ४१२३ ) । देभतुः । ददम्भतुः । इदं कित्वं पिद्पिद्विषयकमिति सुधाकरादयः । तन्मते तिप्सिप्मिप्सु देभ देभिथ देभ इति रूपान्तरं बोध्यम् । अपिद्विषयकमिति न्यासकारादिमते तु ददम्भ ददम्भिथ

---

अनिट् । **आप्नुवन्तीति** । संयोगपूर्वकत्वात् 'हुश्नुवोः' इति न यण् । **आप्नुवः इति** । संयोगपूर्वकत्वात् 'लोपश्चास्य' इति नोकारलोपविकल्पः । **आप्नुहीति** । संयोगपूर्वकत्वादेव 'उतश्च प्रत्ययात्' इति हेर्न लुक् । **शक्लृ शक्ताविति** । शक्नोति । शशाक शेकतुः । शशक्थ–शेकिथ । शेकिव । शक्ता । शक्ष्यति । **अशकदिति** । लृदित्त्वादङ् । **राध साध संसिद्धौ** । अनिटौ । दीर्घाकारवत्त्वात् 'अत एकहल्' इत्यप्राप्तावाह—**राधो हिंसायाम्** । 'घ्वसोः' इत्यतः एदिति अभ्यासलोप इति च अनुवर्तते । 'गमहन' इत्यतः कितीति, 'अत एकहल्मध्ये' इत्यतः लिटीति 'थलि च सेटि' इति सूत्रं चानुवर्तते । तदाह—**एत्वेत्यादिना** । **अपरेधतुरिति** । उपसर्गवशादिह हिंसायां वृत्तिः । अन्यत्र रराधतुः । थल्यपि क्रादिनियमान्नित्यमिट् । 'उपदेशेऽत्वतः' इत्यत्र तपरकरणादिह नेरिनषेधः । तदाह—**रेधिथेति** । **राद्धेति** । 'झषस्तथोः' इति धः ।

**अशू व्याप्ताविति** । ऊदित्त्वाद्वेट् । **अश्नुते इति** । अश्नुवाते अश्नुवते । संयोगपूर्वकत्वात् 'हुश्नुवोः' इति न यण् । **अश्नोतेश्च** । 'अत्र लोपः' इत्यतः अभ्यासस्येत्यनुवर्तते, 'तस्मान्नुट्' इति च । तच्छब्देन 'अत आदेः' इति कृतदीर्घः

ददम्भेत्येव। दभ्यात्। ऋधु १२७१ वृद्धौ। तृप प्रीणने इत्येके। क्षुभ्नादित्वाणत्वं न। तृप्नोति। 'छन्दसि' ( गण ११७ )। आगणान्तादधिकारोऽयम्। अह १२७२ व्याप्तौ। अह्नोति। दघ १२७३ घातने पालने च। दघ्नोति। चमु १२७४ भक्षणे। चम्नोति। रि १२७५ क्षि १२७६ चिरि १२७७ जिरि १२७८ दाश १२७९ दृ १२८० हिंसायाम्। रिणोति। क्षिणोति। अयं भाषायामपीत्येके। 'न तद्यशः शस्त्रभृतां क्षिणोति'। ऋणोत्येक एवाजादिरित्यन्ये। ऋक्षिणोति। चिरिणोति। जिरिणोति। दाश्नोति। दृणोति। वृत्।

इति तिङन्ते स्वादिप्रकरणम्।

---

# अथ तिङन्ते तुदादिप्रकरणम् ॥ ६ ॥

तुद १२८१ व्यथने। इतः षट् स्वरितेतः। (२५३४) तुदादिभ्यः शः। ३। १। ७७॥ तुदति। तुदते। तुतोद। तुतोदिथ। तुतुदे। तोत्ता। अतौ-

---

अकारः परास्त्रयते। तदाह—**दीर्घादिति। आनशे इति।** आनशिषे आनक्षे। आनशिवहे-आनश्वहे। **अष्टेति।** व्रश्चादिना शस्य षत्वे ष्टुत्वम्। विधिलिङ्याह—**अश्नुवीतेति।** आशीर्लिङि ऊदित्त्वादिड्विकल्पं मत्वा आह—**अक्षीष्ट-अशिषीष्टेति।** लुङि सिच इट्पक्षे आह—**आशिष्टेति।** अनिट्पक्षे 'झलो झलि' इति सिचो लोपं मत्वा आह—**आष्टेति।** ष्टिघधातुः षोपदेशः। सेट्।

**आ गणान्तादिति।** स्वादिगणसमाप्तिपर्यन्तमित्यर्थः। **इत्युक्तमिति।** भ्वादादिति भावः। कित्त्वपक्षे आह—**अनिदितामिति नलोप इति।** नन्वनिदितामिति नलोपे सति 'अत एकहल्मध्ये' इत्येत्वसिद्धेः 'दम्भेश्च' इति व्यर्थमित्यत आह—**तस्याभीयत्वादिति।** नलोपस्येत्यर्थः। **दभ्यादिति।** आशीर्लिङि 'अनिदिताम्' इति नलोपः। **छन्दसीति।** गणसूत्रमिदम्। तद्याचष्टे—**आगणान्तादिति। रि क्षि इति।** रि क्षि चिरि जिरि दाश दृ इति षट् धातवः। आद्यद्वितीयावेकाचरौ। तदाह—**रिणोति। क्षिणोतीति। अयं भाषायामपीति।** क्षिधातुरित्यर्थः। तत्र प्रयोगं दर्शयति—**न तद्यश इति। वृदिति।** स्वादयो वृत्ता इत्यर्थः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां
बालमनोरमाख्यायां श्नुविकरणं समाप्तम्।

---

अथ शविकरणा धातवो निरूप्यन्ते। **इतः षडिति।** 'ऋषी गतौ' इत्यतः प्रागित्यर्थः। **तुदादिभ्यः शः।** कर्त्रर्थे सार्वधातुके परे तुदादिभ्यः शः स्यात् स्वार्थे इत्यर्थः। शबपवादः। **तुदतीति।** लघूपधगुणं बाधित्वा नित्यत्वात्

स्सीत्। अतुत्त। णुद १२८२ प्रेरणे। नुदति। नुदते। नुनोद। नुनुदे। नोत्ता। दिश १२८३ अतिसर्जने। अतिसर्जनं दानम्। देष्टा। दिक्षीष्ट। अदिक्षत्। अदिक्षत। भ्रस्ज १२८४ पाके। 'ग्रहिज्या—' ( सू २४१२ ) इति संप्रसारणम्। सस्य श्चुत्वेन शः। शस्य जश्त्वेन जः। भृज्जति—भृज्जते।

**(२५३५) भ्रस्जो रोपधयो रमन्यतरस्याम्** ।६।४।४७॥ भ्रस्जो रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके। मित्त्वादन्त्यादचः परः। स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः। बभर्ज बभर्जतुः। बभर्जिथ–बभर्ष्ठ। बभर्जे। रमभावे—बभ्रज्ज बभ्रज्जतुः। बभ्रज्जिथ। 'स्कोः–' ( सू ३८० ) इति सलोपः।

---

शे कृते तस्य अपित्त्वात् 'सार्वधातुकमपित्' इति ङित्त्वान्न गुण इति भावः। अजन्ताकारवत्त्वाभावात् क्रादिनियमाल्लिटि थल्यपि नित्यमिट्। तदाह—**तुतोदिथेति**। **तोत्तेति**। अनिडिति भावः। **अतौत्सीदिति**। हलन्तलक्षणा वृद्धिः। णुदधातुर्णोपदेशः। अनिट्। दिशधातुरप्यनिट्। **देष्टेति**। व्रश्चेति षत्वे ष्टुत्वम्। स्ये तु 'षढोः' इति षस्य कत्वं च—देक्ष्यति। **दिक्षीष्टेति**। 'लिङ्सिचौ' इति कित्त्वान्न गुणः। 'शल इगुपधात्' इति क्सं मत्वा आह—**अदिक्षत्**। **अदिक्षतेति**।

**भ्रस्ज पाके**। अनिट्। भ्रस्ज् अ ति इति स्थिते आह—**ग्रहिज्येति**। ङित्त्वाद्रेफस्य संप्रसारणमृकारः पूर्वरूपं चेति भावः। भृस्ज् अ ति इति स्थिते आह—**सस्येत्यादि**। णलि भ्रस्ज् अ इति स्थिते—**भ्रस्जो रोपधयोः**। भ्रस्ज इत्यवयवषष्ठी। रोपधयोरिति स्थानषष्ठी। रश्च उपधा च तयोरिति विग्रहः। रेफादकार उच्चारणार्थः। रेफस्य उपधायाश्च स्थाने इति लभ्यते। 'आर्धधातुके' इत्यधिकृतम्। तदाह—**भ्रस्जो रेफस्येत्यादिना**। रमि मकार इत् अकार उच्चारणार्थः। तदाह—**मित्त्वादन्त्यादचः पर इति**। तथाच रेफाकारादुपरि सकारात् प्राक् रेफ आगम इति फलितम्। भ्र र् स् ज् अ इति स्थितम्। ननु रम आगमत्वे रोपधयोरिति कथं स्थानषष्ठीनिर्देश इत्यत आह—**स्थानेति**। स्थानं प्रसङ्गः। रेफस्य उपधायाश्च उच्चारणप्रसङ्गे सति अकारादुपरि रेफः प्रयोज्यः। भकारादुपरि रेफः जकारात्प्राक्सकारश्च न प्रयोज्याविति लब्धम्। तथाच तयोर्निवृत्तिः फलितेति भावः। एवंच भर्ज् अ इति स्थिते द्वित्वादौ रूपमाह—**बभर्जेति**। अतुसादावपि संयोगात्परत्वात्कित्त्वाभावात् 'ग्रहिज्या' इति संप्रसारणं न भवति। भारद्वाजनियमात्थलि वेडिति मत्वा आह—**बभर्जिथ बभर्ष्ठेति**। इडभावपक्षे बभर्ज् थ इति स्थिते 'व्रश्च' इति जस्य षः। ष्टुत्वेन थस्य ठ इति भावः। बभर्जिव।

लिटस्तङ्याह—**बभर्जे इति**। बभर्जाते इत्यादि सुगमम्। रमभावे आह—**बभ्रज्जेति**। णलि भ्रस्ज् अ इति स्थिते द्वित्वे हलादिशेषे अभ्यासजश्त्वे बभ्रस्ज् अ इति स्थिते सस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकार इति भावः। 'लि-

'व्रश्च—' ( सू २९४ ) इति षः। बभ्रष्ठ। बभ्रज्ज। भ्रष्टा-भर्ष्टा। भ्रक्ष्यति-भर्क्ष्यति। 'क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन' (वा४०७८) भृज्ज्यात् भृज्ज्यास्ताम्। भर्क्षीष्ट-भ्रक्षीष्ट। अभार्क्षीत्-अभ्राक्षीत्। अभर्ष्ट-अभ्रष्ट। क्षिप १२८५ प्रेरणे। क्षिपति। क्षिपते। क्षेप्ता। अक्षैप्सीत्। अक्षिप्त। कृष १२८६ विलेखने। कृषति। कृषते। क्रष्टा-कर्ष्टा। कृष्यात्। कृक्षीष्ट। 'स्पृशमृश-'(वा १८२३) इति सिज्वा। पक्षे क्सः। सिचि अम्वा। अक्राक्षीत्-अकार्क्षीत्-अकृक्षत्। तङि 'लिङ्सिचौ—' ( सू २३०० ) इति कित्त्वादम्न।

---

ग्र्यभ्यासस्य ' इति संप्रसारणस्य न प्रसक्तिः, अभ्यासे हलादिशेषेण रेफाभावात्। **बभ्रज्जतुरिति**। संयोगात्परत्वादकित्त्वात् ' ग्रहिज्या ' इति न संप्रसारणमिति भावः। **बभ्रज्जिथेति**। भारद्वाजनियमादिट्पक्षे रमभावपक्षे रूपम्। तत्र इडभावपक्षे बभ्रस्ज् थ इति स्थिते आह—**स्कोरिति**। **व्रश्चेति ष इति**। जस्येति शेषः। रमभावपक्षे लिटस्तङ्याह—**बभ्रज्जेति**। बभ्रज्जाते। बभ्रज्जिषे। इत्यादि सुगमम्। **भ्रष्टेति**। रमभावपक्षे रूपम्। **भर्ष्टेति**। रमागमे भर्ज् ता इति स्थिते जस्य ' व्रश्च ' इति षः, ष्टुत्वेन तकारस्य ट इति भावः। एवं—**भ्रक्ष्यति भर्क्ष्यतीति**। ' षढोः ' इति कत्वे सस्य षत्वमिति विशेषः। भृज्जतु। अभृज्जत्। भृज्जेत्। नतु आशीर्लिङि भ्रस्ज् यात् इति स्थिते यासुटः कित्त्वात् ' ग्रहिज्या ' इति संप्रसारणे पूर्वरूपे सकारस्य श्चुत्वेन शकारे शस्य जश्त्वेन जकारे भृज्ज्यात् इति रूपं वक्ष्यति। तदयुक्तम् संप्रसारणं बाधित्वा परत्वात् रमागमे कृते भर्ज्यात् इति प्रसङ्गादित्यत आह—**क्ङिति रमागममिति**। आशीर्लिङस्तङि सीयुटि रमागमपक्षे आह—**भर्क्षीष्टेति**। रमभावे तु अकित्त्वात्संप्रसारणाभावादाह—**भ्रक्षीष्टेति**। लुङि परस्मैपदे रमागमविकल्पं मत्वा आह—**अभार्क्षीत् अभ्राक्षीदिति**। आत्मनेपदे सिचि रमागमविकल्पं मत्वा आह—**अभर्ष्ट-अभ्रष्टेति**। ' झलो झलि ' इति सिज्लोपः।

**क्षिप प्रेरणे इति**। अनिट्। अजन्ताकारवत्त्वाभावात् क्रादिनियमात्थलि नित्यमिट्। चिक्षेपिथ। एवं कृषधातुरपि। चकर्षिथ। लुटि तासि ' अनुदात्तस्य चर्दुपधस्य इत्यमागमविकल्पः। अमागमाभावे गुणे रपरत्वम्। तदाह—**क्रष्टा-कर्ष्टेति**। आशीर्लिङि परस्मैपदे आह—**कृष्यादिति**। कित्त्वात् झलादित्वाभावाच्च अमागमो गुणश्च नेति भावः। आशीर्लिङस्तङ्याह-**कृक्षीष्टेति**। 'लिङ्सिचौ' इति कित्त्वादमागमो गुणश्च नेति भावः लुङि परस्मैपदे आह—**स्पृशमृशेति सिज्वेति। पक्षे इति**। सिजभावपक्षे ' शलः ' इति क्स इत्यर्थः। **सिचि अम्वेति**। सिच्पक्षे ' अनुदात्तस्य च ' इत्यमागमविकल्प इत्यर्थः। क्से तु कित्त्वादमागमो नेति भावः। **अक्राक्षीदिति**। सिचि अमागमे रूपम्। **अकार्क्षीदिति**। सिचि अमभावपक्षे हलन्तलक्षणा वृद्धिरिति भावः। क्सादेशपक्षे आह—**अकृ-**

**अकृष्ट अकृक्षाताम् अकृक्षत । अकृक्षत अकृक्षाताम् अकृक्षन्त । ऋषी १२८७ गतौ । परस्मैपदी । ऋषति । आनर्ष । जुषी १२८८ प्रीतिसेवनयोः । आत्मनेपदिनश्चत्वारः । जुषते । ओ विजी १२८९ भयचलनयोः । प्रायेणायमुत्पूर्वः । उद्विजते । (२५३६) विज इट् । १ । २ । २ ॥ विजेः पर इडादिः प्रत्ययो ङिद्वत् । उद्विजिता । उद्विजिष्यते । ओ लजी १२९० ओ लस्जी १२९१ व्रीडायाम् । लजते । लेजे । लज्जते । ललज्जे ।**

**अथ परस्मैपदिनः । ओ व्रश्चू १२९२ छेदने । 'ग्रहिज्या--' (सू २४१२) वृश्चति । वव्रश्च वव्रश्चतुः । वव्रश्चिथ-वव्रष्ठ । 'लिट्यभ्यासस्य—' ( सू २४०८) इति संप्रसारणम् रेफस्य ऋकारः । 'उरत्' (सू २२४४) । तस्य च 'अचः पर-**

---

स्मिन्दिति । क्त्वादमागमो गुणश्च नेति भावः । **तङीति** । तङि सिच्पक्षे अकृष् स् त इति स्थिते 'लिङ्सिचौ' इति कित्त्वादम् नेत्यर्थः । गुणोऽपि नेति ज्ञेयम् । **अकृष्टेति** । 'झलो झलि' इति सिज्लोप इति भावः । **अकृक्षातेति** । सिच्पक्षे अनतः परत्वाददादेश इति भावः । क्सादेशपक्षे आह—**अकृक्षतेति** । कित्त्वादम् नेति भावः । **अकृक्षन्तेति** । क्सादेशपक्षे अ कृक्ष झ इति स्थिते अच्परकत्वाभावात् 'क्सस्याचि' इत्यकारलोपाभावादतः परत्वाददादेशाभावे अन्तादेश इति भावः । **ऋषी गताविति** । सेट् । आनर्षिथ । आनर्षिव । अर्षिता । आर्षीत् । **ओ विजी भयेति** । सेट् । उद्विजितेत्यादौ लघूपधगुणे प्राप्ते—**विज इट्** । 'गाङ्कुटादिभ्यः' इत्यतः ङिदित्यनुवर्तते । तदाह—**विजेः पर इत्यादि** । उद्विजिता । उद्विजिषीष्ट । उदविजिष्ट ।

व्रश्च्धातुरूदित्त्वाद्वेट् । **ग्रहिज्येति** । लटि व्रश्च् अ ति इति स्थिते शप्यपित्त्वेन ङित्त्वात् 'ग्रहिज्या' इति रेफस्य संप्रसारणमृकारः पूर्वरूपं चेति भावः । तदाह—**वृश्चतीति** । वृश्चतः वृश्चन्तीत्यादि । **वव्रश्चेति** । णलि रूपमिदम् । थलि च प्रक्रिया अनुपदं वक्ष्यते । अतुसादौ संयोगात्परत्वेन कित्त्वाभावात् 'ग्रहिज्या' इति न संप्रसारणम् । तदाह—**वव्रश्चतुरिति** । ऊदित्त्वात्थलादौ वेट् । तदाह—**वव्रश्चिथ वव्रष्ठेति** । धातुपाठे व्रश्चू इत्यत्र व्रस् च् इति स्थिते सस्य श्चुत्वेन शकारनिर्देशः । तथाच वव्रश्च् थ इति स्थिते श्चुत्वस्यासिद्धत्वात् 'स्कोः' इति सकारलोपे, चस्य 'व्रश्च' इति षत्वे, ष्टुत्वेन थस्य ठत्वे, वव्रष्ठेति रूपम् । वव्रश्चिव । ननु णलि थलि च अकिति द्वित्वे कृते 'लिट्यभ्यासस्य' इत्यभ्यासावयवयोर्वकाररेफयोर्द्वयोरपि संप्रसारणं स्यात् । न च 'न संप्रसारणे संप्रसारणम्' इति वकारस्य संप्रसारणनिषेधः शङ्क्यः । पूर्वं वकारस्य संप्रसारणसंभवादित्यत आह— **लिट्यभ्यासेति** । 'न संप्रसारणे' इति निषेधादेव ज्ञापकात् प्रथमं रेफस्य ऋकारः संप्रसारणमित्यर्थः । तस्य संप्रसारणसंपन्नस्य ऋकारस्य अकारविधिं स्मारयति—**उरदिति** । ननु ऋकारस्य अकारे कृते वकारस्य संप्रसारणं स्यात्, संप्रसारणपरकत्वविरहेण 'न संप्रसारणे' इति निषेधाप्रवृत्तेरित्यत आह—**तस्य चेति** । अकारस्येत्यर्थः । न च उरदत्त्वस्य परनिमित्त-

स्मिन्—' ( सू ५० ) इति स्थानिवद्भावात् 'न संप्रसारणे—' ( सू ३६३ ) इति वस्योत्वं न। व्रश्चिता—व्रष्टा। व्रश्चिष्यति—व्रक्ष्यति। वृश्च्यात्। अव्रश्चीत्—अव्राक्षीत्। व्यच १२९३ व्याजीकरणे। विचति। विव्याच विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्—अव्यचीत्। 'व्यचेः कुटादित्वमनसि' (वा ३४५६) इति तु नेह प्रवर्तते। 'अनसि' इति पर्युदासेन कृन्मात्रविषयत्वात्। उछि १२९४ उञ्छे। उञ्छति। उछी १२९५ विवासे। उच्छति। ऋच्छ १२९६ गतीन्द्रियप्रलयमूर्तिभावेषु। 'ऋच्छत्यृताम्' ( सू २३८३ ) इति गुणः। द्विहल्ग्रहणस्यानेकहलुपलक्षणत्वान्नुट्। आनर्च्छ आनर्च्छतुः। ऋच्छिता। मिच्छ १२९७ उत्क्लेशे। उत्क्लेशः पीडा। मिमिच्छ। अमिच्छीत्। जर्ज १२९८ चर्च १२९९ झर्झ १३०० परिभाषणभर्त्सनयोः। त्वच १३०१ संवरणे। तत्वाच। ऋच १३०२ स्तुतौ। आनर्च। उब्ज १३०३ आर्जवे। उज्झ १३०४ उत्सर्गे। लुभ १३०५ विमोहने। विमोहनमाकुलीकरणम्। लुभति। लोभिता—लोब्धा। लोभिष्यति। रिफ १३०६ कत्थनयुद्धनिन्दाहिंसादानेषु। रिफति। रिरेफ। रिह इत्येके। 'शिशुं न विप्रा मतिभी रिहन्ति'। तृप १३०७ तृम्फ १३०८ तृप्तौ। आद्यः प्रथमान्तः। द्वितीयो द्वितीयान्तः। द्वावपि द्वितीयान्तावित्यन्ये। तृपति। ततर्प। तर्पिता। 'स्पृशमृश' इति सिज्विकल्पाश्रवणात् कथं स्थानिवत्त्वमिति वाच्यम्। आपादपरिसमाप्तेरङ्गाधिकारः इत्यभ्युपगम्य अङ्गाक्षिप्तप्रत्ययनिमित्तकत्वाभ्युपगमात्। 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इति न्यायस्तु 'न संप्रसारणे' इति निषेधादेव न स्थानिभेदे प्रवर्तत इति ज्ञायते। अत एव सुद्ध्युपास्य इत्यादौ धकारस्य द्वित्वे कृते पूर्वधकारस्य जश्त्वेन दकारे तस्य द्वित्वमित्यास्तां तावत्। आशीर्लिङ्याह—**वृश्च्यादिति**। कित्त्वात् संप्रसारणमिति भावः। **अव्रश्चीदिति**। ऊदित्त्वादिट्पक्षे 'नेटि' इति हलन्तलक्षणवृद्धिनिषेधः। इडभावे हलन्तलक्षणवृद्धिं मत्वा आह—**अव्राक्षीदिति**। अव्रश्च् सीत् इति स्थिते हलन्तलक्षणा वृद्धिः। श्चुत्वस्यासिद्धत्वात् 'स्कोः' इति सलापः। 'व्रश्च' इति चस्य षः, तस्य 'षढोः' इति कः, सस्य ष इति भावः। 'नकारजावनुस्वारपञ्चमौ झलि धातुषु। सकारजः शकारःश्चेर्षाट्टवर्गस्तवर्गजः।' इत्याहुः।

**व्यच व्याजीकरणे**। सेट्। शे 'ग्रहिज्या' इति संप्रसारणं मत्वा आह—**विचतीति**। **विव्याचेति**। 'लिट्यभ्यासस्य' इत्यभ्यासयकारस्य संप्रसारणम्। 'न संप्रसारणे' इति न वकारस्य। **विविचतुरिति**। कित्त्वात् 'ग्रहिज्या' इति संप्रसारणे कृते द्वित्वादीति भावः। विव्यचिथ। विविचिव। **विच्यादिति**। आशीर्लिङि कित्त्वाद्यकारस्य संप्रसारणम्। 'अतो हलादेः' इति वृद्धिविकल्पं मत्वा आह—**अव्याचीत् अव्यचीदिति**। ननु 'व्यचेः कुटादित्वमनसि' इति व्यचेः

१ इदमयुक्तं, दकारस्य पूर्वाश्रितस्थानि विकारत्वेन तल्लक्ष्यत्वात्। उदवोढामिति ओकारेऽप्यन्यथा हलन्तलक्षणवृद्धि प्रसङ्गात्।

कल्पः पौषादिकस्यैव। अङ्पवादत्वात्। तेनात्र नित्यं सिच्। अतर्पीत्। तृम्फति। शस्य ङित्वात् 'अनिदिताम्' (सू ४१५) इति नलोपे 'शे तृम्फादीनां नुम् वाच्यः' (वा ४३२३) आदिशब्दः प्रकारे। तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः। तृम्फन्ति। ततृम्फ। तृफ्यात्। तुप १३०९ तुम्प १३१० तुफ १३११ तुम्फ १३१२ हिंसायाम्। तुपति। तुम्पति। तुफति। तुम्फति। दृप १३१३ दृम्फ १३१४ उत्क्लेशे। प्रथमः प्रथमान्तः। द्वितीयो द्वितीयान्तः। प्रथमो द्वितीयान्त इत्येके। दृपति। दृफति। दृम्फति। ऋफ १३१५ ऋम्फ १३१६ हिंसायाम्। ऋफति। आनर्फ। ऋम्फति। ऋम्फांचकार। गुफ १३१७ गुम्फ १३१८ ग्रन्थे। गुफति। जुगोफ। गुम्फति। जुगुम्फ। उभ १३१९ उम्भ १३२० पूरणे। उभति। उवोभ। उम्भति। उम्भांचकार। शुभ १३२१ शुम्भ १३२२ शोभार्थे। शुभति। शुम्भति। दृभी १३२३ ग्रन्थे। दृभति। चृती १३२४ हिंसाश्रन्थनयोः। चर्तिता। 'सेऽसिचि' (सू २५०६) इति वेट्। चर्तिष्यति—चर्त्स्यति। अचर्तीत्। विध १३२५ विधाने। विधति। वेधिता। जुड १३२६ गतौ। तवर्गपञ्चमान्त इत्येके। जुडति। 'मरुतो जुनन्ति'। मृड १३२७ सुखने। मृडति। मर्डिता। पृड १३२८ च। पृडति। पृण १३२९ प्रीणने। पृणति। पपर्ण। वृण १३३० च।

---

कुटादित्ववचनात् व्यचिता, व्यचिष्यति, इत्यादावपि 'गाङ्कुटादिभ्यः' इति ङित्वात् संप्रसारणं स्यादित्यत आह—**व्यचेरिति। कुन्मात्रेति।** अवधारणे मात्रशब्दः। 'उछि उञ्छे' 'उछी विवासे' इति भ्वादौ पठितौ। इह तयोः पाठस्तु शविकरणार्थः। तेन उञ्छती उञ्छन्ती, उच्छती उच्छन्ती इति 'आच्छीनद्योः' इति नुम्विकल्पः सिध्यति। भ्वादौ पाठस्तु पित्स्वरार्थ इत्यन्यत्र विस्तरः। **ऋच्छ गतीति।** 'छे च' इति तुकि तस्य श्चुत्वेन चकारनिर्देशः। ऋच्छति। णलि लघूपधत्वाभावाद्गुणे अप्राप्ते आह—**ऋच्छत्यृतामिति।** द्वित्वे उरदत्वे हलादिशेषे 'अत आदेः' इति दीर्घे आ अर्च्छ इति स्थिते बहुहल्त्वात् द्विहल्त्वाभावान्नुटि अप्राप्ते आह—**द्विहल्ग्रहणस्येति। आनर्च्छेति।** 'इजादेः' इत्यत्र अनृच्छः इति पर्युदासादाम् न। **ऋच्छितेति।** 'ऋच्छत्यृताम्' इत्यत्र लिटीत्यनुवृत्तेर्न गुण इति भावः।

लुभधातुः सेट्। 'तीषसह' इति वेडिति मत्वा आह—**लोभिता लोब्धेति। शिशुं नेति।** नशब्द इवार्थे। विप्राः शिशुमिव मतिभिः रिहन्ति हिंसन्ति इत्यर्थः। तृपधातुः श्यन्विकरण एवानिट्। **अङ्पवादत्वादिति।** अपवादस्य उत्सर्गसमानदेशत्वादिति भावः। **चृती हिंसाश्रन्थनयोरिति।** श्रन्थनं विस्रंसनम्। चृततीत्यादि सुगमम्। "अथास्य योक्त्रं विचृतेत्" इत्याश्वलायनः। विस्रंसयेदित्यर्थः, उपसर्गवशात्। 'यजमानो मेखलां विचृतते' इत्यापस्तम्बसूत्रे तु

वृणति। मृण १३३१ हिंसायाम्। तुण १३३२ कौटिल्ये। तुतोण। पुण १३३३ कर्मणि शुभे। पुणति। मुण १३३४ प्रतिज्ञाने। कुण १३३५ शब्दोपकरणयोः। शुन १३३६ गतौ। द्रुण १३३७ हिंसागतिकौटिल्येषु। घुण १३३८ घूर्ण १३३९ भ्रमणे। षुर १३४० ऐश्वर्यदीप्त्योः। सुरति। सुषोर। आशिषि सूर्यात्। कुर १३४१ शब्दे। कुरति। कूर्यात्। अत्र 'न भकुर्छुराम्' (सू १६२९) इति निषेधो न। करोतेरेव तत्र ग्रहणादित्याहुः। खुर १३४२ छेदने। मुर १३४३ संवेष्टने। क्षुर १३४४ विलेखने। घुर १३४५ भीमार्थशब्दयोः। पुर १३४६ अग्रगमने। वृहू १३४७ उद्यमने। दन्त्योष्ठ्यादिः। पवर्गादिरित्यन्ये।

तृहू १३४८ स्तृहू १३४९ तृंहू १३५० हिंसार्थाः। तृहति। ततर्ह स्तृहति। तस्तर्ह। तर्हिता–तर्ढा। स्तर्हिता–स्तर्ढा। अतृंहीत्–अताङ्क्षीत् अताण्ढाम्। इषु १३५१ इच्छायाम्। 'इषुगमि—' (सू २४००) इति छः। इच्छति। एषिता–एष्टा। एषिष्यति। इष्यात्। ऐषीत्। मिष १३५२ स्पर्धायाम्। मिषति। मेषिता। किल १३५३ श्वैत्यक्रीडनयोः। तिल १३५४ स्नेहने। चिल १३५५ वसने। चल १३५६ विलसने। इल १३५७ स्वप्नक्षेपणयोः। विल १३५८ संवरणे। दन्त्योष्ठ्यादिः। बिल १३५९ भेदने। ओष्ठ्यादिः। णिल १३६० गहने। हिल १३६१ भावकरणे। शिल १३६२ षिल १३६३ उञ्छे। मिल १३६४ श्लेषणे। लिख १३६५ अक्षरविन्यासे। लिलेख। कुट १३६६ कौटिल्ये। 'गाङ्कुटादिभ्यः—' (सू २४६१) इति ङित्वम्। चुकुटिथ। अञ्णित इति किम्। चुकोट। कुटिता। पुट १३६७ संश्लेषणे। कुच १३६८ संकोचने। गुज १३६९ शब्दे। गुड १३७० रक्षायाम्। डिप १३७१ क्षेपे। छुर १३७२ छेदने। 'न भकुर्छुराम्' (सू १६२९) इति न दीर्घः। छुर्यात्।

---

तङ् आर्षः। पुधातुः षोपदेशः। **कुर शब्दे। करोतेरेवेति**। व्याख्यानमेवात्र शरणम्। वृहूधातुः ऋदुपधः। ऊदित्त्वाद्वेट्कः। **पवर्गादिरिति**। पवर्गतृतीयादिरित्यर्थः।

**तृहू स्तृहू तृंहू इति**। त्रयोऽपि ऋकारवन्तः। तृतीयोऽनुस्वारवान्। ऊदित्त्वाद्वेट्। **तर्ढेति**। तृहेस्तासि ढत्वधत्वष्टुत्वढलोपाः। एवं स्तर्ढा। तृण्ढा। अतर्हीत् अतार्क्षीत्, अस्तर्हीत् अस्तार्क्षीत्, इति सिद्धवत्कृत्य आह—**अतृंहीत्—अताङ्क्षीदिति**। तृंहेरिडभावपक्षे हलन्तलक्षणवृद्धौ रपरत्वम्। हस्य ढः, ढस्य कः, षत्वम्। अनुस्वारस्य परसवर्णो ङकार इति भावः। **अताण्ढामिति**। तृंहेस्तसस्तामि सिच इडभावपक्षे लोपे हलन्तलक्षणवृद्धौ ढत्वधत्वष्टुत्वढलोपा इति

**स्फुट १३७३ विकसने**। स्फुटति। पुस्फोट। **मुट १३७४ आक्षेपमर्दनयोः**। **त्रुट १३७५ छेदने**। 'वा भ्राश-'(सू २३२१) इति श्यन्वा। त्रुट्यति-त्रुटति तुत्रोट। त्रुटिता। **तुट १३७६ कलहकर्मणि**। तुटति। तुतोट। तुटिता। **चुट १३७७ छुट १३७८ छेदने**। **जुड १३७९ बन्धने**। **कड १३८० मदे**। **लुट १३८१ संश्लेषणे**। **कृड १३८२ घनत्वे**। घनत्वं सान्द्रता। चकर्ड। कृडिता। **कुड १३८३ बाल्ये**। **पुड १३८४ उत्सर्गे**। **घुट १३८५ प्रतिघाते**। **तुड १३८६ तोडने**। तोडनं भेदः। **थुड १३८७ स्थुड १३८८ संवरणे**। थुडति। तुथोड। तुस्थोड। खुड छुड इत्येके। **स्फुर १३८९ फुल १३९० संचलने**। स्फुर स्फुरणे, स्फुल संचलने इत्येके। **(२५३७) स्फुरतिस्फुलत्योर्निर्निविभ्यः। ८। ३। ७६॥** षत्वं वा स्यात्। निष्फुरति-निःस्फुरति। स्फर इत्यकारोपधं केचित्पठन्ति। पस्फार। **स्फुड १३९१ चुड १३९२ व्रुड १३९३ संवरणे**। **क्रुड १३९४ भृड १३९५ निमज्जने** इत्येके। **गुरी १३९६ उद्यमने**। अनुदात्तेत्। गुरते। जुगुरे। गुरिता। **णू १३९७ स्तवने**। दीर्घान्तः। 'परिणूतगुणोदयः'। इतश्चत्वारः परस्मैपदिनः। नुवति। अनुवीत्। **धू १३९८ विधूनने**। धुवति। **गु १३९९ पुरीषोत्सर्गे**। जुगुविथ-जुगुथ। गुता। गुष्यति। अगुषीत्। 'ह्रस्वादङ्गात्' ( सू २३६९ )। अगुताम् अगुषुः। **ध्रु १४०० गतिस्थैर्ययोः**। ध्रुव इति पाठान्तरम्। आद्यस्य ध्रुवतीत्यादि गुवतिवत्। द्वितीयस्तु सेट्। दुध्रुविथ। ध्रुविता। ध्रुविष्यति। ध्रुव्यात्। अध्रुवीत् अध्रुविष्टाम्। **कुङ् १४०१ शब्दे**। दीर्घान्तः इति कैयटादयः। कुविता। अकुविष्ट। ह्रस्वान्तः इति न्यासकारः। कुता। अकुत। वृत्। कुटादयो वृत्ताः।

**पृङ् १४०२ व्यायामे**। प्रायेण व्याङ्पूर्वः। रिङ्। इयङ्। व्याप्रियते। व्यापप्रे व्यापप्राते। व्यापरिष्यते। व्यापृत व्यापृषाताम्। **मृङ् १४०३ प्राणत्यागे**। **(२५३८) म्रियतेर्लुङ्लिङोश्च। १। ३। ६१॥** लुङ्लिङोः शितश्च

---

भावः। एवं अस्तार्ढाम्। अतारर्ढाम्। **स्फुर स्फुरणे। स्फुरतिस्फुलत्योः।** मूर्धन्य इत्यधिकृतम्। 'सिवादीनां वा' इत्यतो वेत्यनुवर्तते। तदाह—**षत्वं वा स्यादिति। णू स्तवने इति।** णोपदेशः। **परिणूतेति।** 'श्र्युकः किति' इति नेट्। **कुङ् शब्दे। दीर्घान्त इति।** ततश्चायं सेट्।

**पृङ् व्यायामे इति।** ह्रस्वान्तोऽयमनिट्। 'ऋद्धनोः स्ये' इति इटं मत्वा आह—**व्यापरिष्यते इति।** मृङ्धातुरनिट्। **म्रियतेः।** 'अनुदात्तङितः' इत्यतः आत्मनेपदमित्यनुवर्तते। चकारेण 'शदेः शितः' इत्यतः शित इत्यनुकृष्यते। प्रकृतिभूतादित्यध्याहार्यम्। तदाह—**लुङ्लिङोरिति। तङ् स्यादिति।** आत्मनेपदं स्यादित्यर्थः, म्रियमाणः इत्यत्र आनस्यापि इष्टत्वात्। ननु

प्रकृतिभूतान्मृङस्तङ् स्यान्नान्यत्र । ङित्वं स्वरार्थम् । म्रियते । ममार । ममर्थ । मम्रिव । मर्तासि । मरिष्यति । मृषीष्ट । अमृत ।

अथ परस्मैपदिनः सप्त । रि १४०४ पि १४०५ गतौ । लघूपधगुणादन्तरङ्गत्वादियङ् । रियति । पियति । रेता । पेता । धि १४०६ धारणे । चि १४०७ निवासगत्योः । षू १४०८ प्रेरणे । सुवति । सविता । कॄ १४०९ विक्षेपे । किरति किरतः । चकार चकरतुः । करिता–करीता । कीर्यात् । अकारीत् । (२५३९) **किरतौ लवने । ६ । १ । १४० ॥** उपात्किरतेः सुडागमः स्याच्छेदेऽर्थे । उपस्किरति । 'अडभ्यासव्यवायेऽपि सुट् कात्पूर्व इति वक्तव्यम्' ( वा ३६९९ ) । उपास्किरत् उपचस्कार । (२५४०) **हिंसायां प्रतेश्च । ६ । ४ । १४१ ॥** उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायाम् । उपस्किरति । प्रतिस्किरति । गॄ १४१० निगरणे । (२५४१) **अचि विभाषा । ८ । २ । २१ ॥** गिरतेः रेफस्य लत्वं वा स्यादजादौ । गिरति–गिलति । जगार–जगाल । जगरिथ–जगलिथ । गरिता–गलिता[1] । दृङ् १४११ आदरे । आद्रियते आद्रियेते । आदद्रे ।

ङित्वादेव सिद्धे किमर्थमिदमित्याशङ्क्य नियमार्थमित्याह—**नान्यत्रेति** । तर्हि ङित्त्वं व्यर्थमित्यत आह—**ङित्त्वं स्वरार्थमिति** । 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तम्' इत्येतदर्थमित्यर्थः । **म्रियते इति** । शे कृते रिङियङाविति भावः । ऋदन्तत्वात् भारद्वाजमतेऽपि नेडित्याह—**ममर्थेति । मम्रिवेति** । क्रादिनियमादिट् । मर्ता । 'ऋद्धनोः स्ये' इति इटं मत्वा आह—**मरिष्यतीति** । **रि पि गताविति** । द्वाविमावनिटौ । ननु शे कृते तिपमाश्रित्य इकारस्य परत्वाल्लघूपधगुणः स्यादित्यत आह—**अन्तरङ्गत्वादियङिति** ।

**कॄ विक्षेपे इति** । दीर्घान्तोऽयं, सेट् । **किरतीति** । 'ऋत इद्धातोः' इति इत्त्वं रपरत्वम् । **चकरतुरिति** । कित्वेऽपि 'ऋच्छत्यॄताम्' इति गुण इति भावः । 'वृतो वा' इति मत्वा आह—**करिता करीतेति । किरतौ लवने । उपादिति** । 'उपात् प्रतियत्ने' इत्यतस्तदनुवृत्तेरिति भावः । **सुडागम इति** । 'सुट् कात्पूर्वः' इत्यतस्तदनुवृत्तेरिति भावः । 'अडभ्यासव्यवायेऽपि' इति वार्तिकम् । 'सुट् कात्पूर्वः' इत्यनुवृत्तिलभ्यम् । **हिंसायां प्रतेश्च** । चकारादुपादिति समुच्चीयते । तदाह—**उपादिति । गॄ निगरणे इति** । निगरणं भक्षणम् । सेट् । **अचि विभाषा** । 'ग्रो यङि' इत्यतः ग्रः इत्यनुवर्तते । 'कृपो रो लः' इत्यतः रो लः इति । तदाह—**गिरतेरिति । अजादाविति** । 'धातोः कार्यमुच्यमानं तत्प्रत्यये भवति' इति परिभाषालब्धस्य प्रत्ययस्य अचा विशेषणात्तदादिविधिः । तेन गिरावित्यादौ नेति 'मृजेर्वृद्धिः' इति सूत्रभाष्ये स्पष्टम् । **दृङ् आदरे इति** । ह्रस्वान्तोऽयम् । अनिट् । **आद्रियते इति** । रिङ् इयङ् । 'ऋद्-

१ गरिता, गरीता, गलिता गलीता, इत्येव सर्वत्र पाठः ।

आदद्रिषे। आदर्ता। आदरिष्यते। आदृषीष्ट। आदृत आदृषाताम्। धृङ् १४१२ अवस्थाने। ध्रियते।

अथ परस्मैपदिनः षोडश। प्रच्छ १४१३ ज्ञीप्सायाम्। पृच्छति। पप्रच्छ पप्रच्छतुः। पप्रच्छिथ–पप्रष्ठ। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्। वृत्। किरादयो वृत्ताः। सृज १४१४ विसर्गे। 'विभाषा सृजिदृशोः' ( सू २४०४ )। ससर्जिथ सस्रष्ठ। स्रष्टा। स्रक्ष्यति। 'सृजिदृशोर्झल्यमकिति' ( सू २४०५ ) इत्यमागमः। सृजेत्। सृज्यात्। अस्राक्षीत्। टु मस्जो १४१५ शुद्धौ। मज्जति। ममज्ज। 'मस्जिनशोर्झलि' ( सू २५१७ ) इति नुम्। 'मस्जेरन्त्यात्पूर्वो नुम् वाच्यः' ( वा ३२१ )। संयोगादिलोपः। ममङ्क्थ–ममज्जिथ। मङ्क्ता। मङ्क्ष्यति। अमाङ्क्षीत् अमाङ्क्ताम्। रुजो १४१६ भङ्गे। रोक्ता। रोक्ष्यति। अरौक्षीत् अरौक्ताम्। भुजो १४१७ कौटिल्ये। रुजिवत्। छुप १४१८ स्पर्शे। छोप्ता अच्छौप्सीत्। रुश १४१९ रिश १४२० हिंसायाम्। तालव्या-

---

नोः स्ये ' इति इटं मत्वा आह––**आदरिष्यते इति**। **आदृषीष्टेति**। ' उश्च ' इति कित्वान्न गुणः। **आदृतेति**। ' ह्रस्वादङ्गात् ' इति सलोपः।

**प्रच्छ ज्ञीप्सायामिति**। ज्ञातुमिच्छा ज्ञीप्सा। अनिडयम्। **पृच्छतीति**। शस्य ङित्त्वात् ' ग्रहिज्या ' इति रेफस्य संप्रसारणम् ऋकारः पूर्वरूपं चेति भावः। **पप्रच्छतुरिति**। संयोगात् परत्वेन कित्त्वाभावान्न संप्रसारणमिति भावः। भारद्वाजनियमात्थलि वेडिति मत्वा आह––**पप्रच्छिथ पप्रष्ठेति**। इडभावपक्षे व्रश्चादिना छस्य षः, थस्य ष्टुत्वेन ठ इति भावः। पप्रच्छिव। **प्रष्टेति**। छस्य व्रश्चेति षः, तकारस्य ष्टुत्वेन टः। नच षत्वस्यासिद्धत्वात् पूर्वं तुकि ततः छस्य षत्वे, ष्टुत्वयोः प्रट्ष्टेति स्यादिति वाच्यम्, व्रश्चेति सूत्रे सतुक्कस्य छस्य ग्रहणात्[1]। **किरादयो वृत्ता इति**। नचैवं सति ' किरश्च पञ्चभ्यः ' इत्यत्र पञ्चग्रहणं व्यर्थं किरादीनां पञ्चत्वादिति वाच्यम्, तस्य ' रुदादिभ्यः सार्वधातुके ' इत्युत्तरार्थत्वात्। **सृज विसर्गे**। अनिट्। सृजति। ससर्ज ससृजतुः। अजन्ताकारवत्त्वाभावेऽपि ' विभाषा सृजिदृशोः ' इति थलि वेट् इति मत्वा आह—**ससर्जिथ सस्रष्ठेति**। इडभावे ' व्रश्च ' इति जस्य षः, थस्य ष्टुत्वेन ठः, पित्त्वेन अकित्त्वात् ' सृजिदृशोः ' इत्यमागम इति भावः। ससृजिव। **टु मस्जो शुद्धौ मज्जतीति**। सस्य श्चुत्वेन शः, तस्य जश्त्वेन ज इति भावः। **ममङ्क्थेति**। मस्जेर्द्वित्वे हलादिशेषे ममस्ज् थ इति स्थिते ' स्कोः ' इति सकारलोपे ममज् थ इति स्थिते जस्य कुत्वेन गकारे, ' मस्जिनशोः ' इति नुमि, तस्यानुस्वारे, तस्य परसवर्णो ङकारः, गस्य चर्त्वेन कः इति बोध्यम्। यद्यपि अकारात् परत्र नुमि सत्यपि इदं सिध्यति, तथापि अन्त्यात् पूर्वो नुमित्यस्य मग्न इत्यादौ नलोपः फलम्। अन्यथा

---

१ तुगागम तकारस्य, तासस्तकारस्य चेति द्विवचनाशयः।

न्तौ । रोष्टा । रोक्ष्यति । रेष्टा । रेक्ष्यति । लिश १४२१ गतौ । अलिक्षत् स्पृश १४२२ संस्पर्शने । स्प्रष्टा-स्पर्ष्टा । स्प्रक्ष्यति-स्पर्क्ष्यति। अस्प्राक्षीत्-अस्पार्क्षीत्-अस्पृक्षत् । विच्छ १४२३ गतौ । 'गुपूधूप-' (सू २३०३) इत्यायः ।आर्धधातुके वा । विच्छायति । विच्छायांचकार । विविच्छ । विश १४२४ प्रवेशने। विशति। वेष्टा। मृश १४२५ आमर्शने । आमर्शनं स्पर्शः। अम्राक्षीत्-अमार्क्षीत्-अमृक्षत्। णुद १४२६ प्रेरणे । कर्त्रभिप्रायेऽपि फले परस्मैपदार्थः पुनःपाठः । षद्लृ १४२७ विशरणगत्यवसादनेषु । सीदति इत्यादि भौवादिकवत् । इह पाठो नुम्विकल्पार्थः । सीदती-सीदन्ती । ज्वलादौ पाठस्तु णार्थः । सादः । स्वरार्थश्च । शबनुदात्तः । शस्तूदात्तः । शद्लृ १४२८ शातने । स्वरार्थ एव पुनः पाठः। शता तु नास्ति । 'शदेः शितः' ( सू २३६२ ) इत्यात्मनेपदोक्तेः ।

अथ षट् स्वरितेतः । मिल १४२९ संगमे । मिल संश्लेषणे इति पठितस्य पुनः पाठः कर्त्रभिप्राये तङर्थः। मिलति। मिलते। मिमेल। मिमिले। मुच्लृ १४३०

---

उपधात्वाभावान्नस्य लोपो न स्यादिति भावः । एवं—मङ्क्तेति । मङ्क्ष्यति इत्यत्र तु सस्य षत्वं विशेषः । 'रुजो भङ्गे' इत्यारभ्य 'विच्छ गतौ' इत्यतः प्रागनिटः । 'अनुदात्तस्य चर्दुपधस्य' इत्यम्विकल्पं मत्वा आह-स्प्रष्टा स्पर्ष्टेति ।

णुद प्रेरणे । णोपदेशोऽयम् । 'विश प्रवेशने' इत्यारभ्य 'शद्लृ शातने' इत्यन्ता अनिटः । तत्र अदुपधस्य थलि वेट् । अन्यस्य तु नित्यमेवेट् । मृशेः 'अनुदात्तस्य च' इत्यम्विकल्पः । तदाह—अम्राक्षीत्-अमार्क्षीदिति । 'स्पृशमृश' इति सिज्वेति भावः । सिजभावे 'शल इगुपधात्' इति क्सं मत्वा आह-अमृक्षदिति । णुदधातुर्णोपदेशः । ननु तनादिगण एवास्मिन् स्वरितेत्सु पठितस्य किमर्थमिह पाठ इत्यत आह—कर्त्रभिप्रायेऽपीति । षद्लृधातोर्भ्वादौ पठितादेव सीदति इत्यादिसिद्धेः इह पाठो व्यर्थ इत्यत आह—इह पाठः इति । सीदन्ती इति शविकरणात् शत्रन्तात् ङीपि 'आच्छीनद्योः' इति नुम्विकल्पार्थ इह पाठ इत्यर्थः । भ्वादावेव पाठे तु 'शप्श्यनोर्नित्यम्' इति नित्यो नुम् स्यादिति भावः । तर्हि भ्वाद्यन्तर्गणे ज्वलादावस्य पाठो व्यर्थ इत्यत आह-ज्वलादाविति । 'ज्वलितिकसन्तेभ्यः' इति कर्तरि णप्रत्ययार्थ इति भावः । तदुदाहृत्य दर्शयति—साद इति । उभयत्र पाठस्य फलान्तरमाह—स्वरार्थश्चेति । तदेव विशदयति—शबनुदात्तः इति । 'अनुदात्तौ सुप्पितौ' इति पित्स्वरेणेति भावः । शस्तूदात्त इति । 'प्रत्ययः' 'आद्युदात्तश्च' इत्यनेनेति भावः । ननु 'शद्लृ शातने' इत्यस्य भ्वादौ पाठादेव सिद्धे इह पाठो व्यर्थ इत्यत आह—स्वरार्थ एवेति । प्रागुक्तपित्त्वापित्त्वकृतस्वरभेदार्थ एवेत्यर्थः । ननु शत्रन्तात् ङीपि उक्तरीत्या नुम्विकल्पार्थोऽपि कुतो न स्यादित्यत आह—शता तु ना-

मोचणे (२५४६) शे मुचादीनाम्। ७। १। ५६॥ नुम् स्यात्। मुञ्चति। मुञ्चते। मोक्ता। मुच्यात्। मुक्षीष्ट। अमुचत्। अमुक्त अमुक्षाताम्। लुप्लृ १४३१ छेदने। लुम्पति। लुम्पते। अलुपत्। अलुप्त। विद्लृ १४३२ लाभे। विन्दति। विन्दते। विवेद। विविदे। व्याघ्रभूत्यादिमते सेट्कोऽयम्। वेदिता। भाष्यादिमतेऽनिट्कः। वेत्ता। परिवेत्ता। परिवेदने। ज्येष्ठं परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः। तृन्तृचौ। लिप १४३३ उपदेहे। उपदेहो वृद्धिः। लिम्पति। लिम्पते। लेप्ता। 'लिपिसिचि—'( सू २४१८ ) इत्यङ्। तङि तु वा। अलिपत्। अलिपत–अलिप्त। षिच १४३४ चरणे। सिञ्चति। सिञ्चते। असिचत्। असिचत–असिक्त। अभिषिञ्चति। अभ्यषिञ्चत्। अभिषिषेच।

अथ त्रयः परस्मैपदिनः। कृती १४३५ छेदने। कृन्तति। चकर्थ। कर्तिता। कर्तिष्यति–कर्त्स्यति। अकर्तीत्। खिद १४३६ परिघाते। खिन्दति चिखेद। खेत्ता। अयं दैन्ये दिवादौ रुधादौ च। पिश १४३७ अवयवे। पिंशति। पेशिता। अयं दीपनायामपि। 'त्वष्टा रूपाणि पिंशतु' वृत्। मुचादयस्तुदादयश्च वृत्ताः।

इति तिङन्ते तुदादिप्रकरणम्।

---

स्तीति। शदेर्लटः शानजेव, नतु शत्रादेश इत्यर्थः। कुत इत्यत आह—शदेः शित इतीति।

मिल संगमे। पठितस्येति। अस्मिन्नेव तुदादिगणे परस्मैपदिषु पठितस्येत्यर्थः। तङर्थ इति। पूर्वत्र पाठस्तु कर्त्रभिप्रायेऽपि परस्मैपदार्थ इत्यर्थः। मुचॢ मोचणे। शे मुचादीनाम्। नुम् स्यादिति। शेषपूरणमिदम्। 'इदितो नुम्' इत्यतस्तदनुवृत्तेरिति भावः। मुक्षीष्टेति। 'लिङ्सिचौ' इति कित्त्वान्न गुण इति भावः। अमुचदिति। लृदित्त्वादङिति भावः। लुङि तङि आह—अमुक्तेति। 'झलो झलि' इति सिज्लोप इति भावः। लिप उपदेहे। तङि तु वेति। 'आत्मनेपदेष्वन्यतरस्याम्' इत्यनेनेति शेषः। षिच क्षरणे। अभिषिञ्चतीति। 'उपसर्गात्सुनोति' इति षः। अभ्यषिञ्चदिति। 'प्राक्सितादड्व्यवायेऽपि' इति षत्वम्। अभिषिषेचेति। 'स्थादिष्वभ्यासेन' इति षः।

कृती छेदने इति। ईदित्त्वं 'श्वीदित' इत्येतदर्थम्। 'सेऽसिचि' इति वेडिति मत्वा आह—कर्तिष्यति कर्त्स्यतीति। पिशि अवयवे इति। अवयवक्रियायामित्यर्थः। रूपाणि पिंशत्विति। प्रकाशयत्वित्यर्थः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमाख्यायां शविकरणं समाप्तम्।

# अथ तिङन्ते रुधादिप्रकरणम् ॥ ७ ॥

रुधिर् १४३८ आवरणे । नव स्वरितेतः इरितश्च । (२५४३) रुधादिभ्यः श्नम् । ३ । १ । ७८ ॥ शपोऽपवादः । मित्त्वादन्त्यादचः परः । नित्यत्वाद्गुणं बाधते । रुणद्धि । 'श्नसोरल्लोपः' ( सू २४६६ ) । णत्वस्यासिद्धत्वादनुस्वारः । परसवर्णः । तस्यासिद्धत्वाण्णत्वं न । 'न पदान्त' (सू ५१) इति सूत्रेणानुस्वारपरसवर्णयोरल्लोपो न स्थानिवत् । रुन्द्धः । रुन्धन्ति । रुन्द्धे । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु-रुन्द्धात् । रुन्द्धि । रुणधानि । रुणधै । अरुणत् अरुन्द्धाम् । अरुणत्—अरुणः । अरुणधम् । अरुधत्—अरौत्सीत् । अरुद्ध । भिदिर् १४३९ विदारणे । भिनत्ति । भिन्ते । भेत्ता । भेत्स्यति । अभिनत्—अभिनः । अभिनदम् । अभिन्त ।

---

अथ श्नम्विकरणा धातवो निरूप्यन्ते । **रुधादिभ्यः श्नम्** । कर्त्रर्थे सार्वधातुके परे रुधादिभ्यः श्नम्प्रत्ययः स्यात् स्वार्थे इत्यर्थः । तदाह—**शपोऽपवादः इति** । श्नमि शमावितौ । मित्त्वस्य फलमाह—**मित्त्वादन्त्यादचः पर इति** । प्रत्ययत्वात् शकारस्येत्संज्ञा । शकारनिर्देशस्तु 'श्नसोरल्लोपः' 'श्नान्नलोपः' इत्यत्र विशेषणार्थः । ननु सार्वधातुकसंज्ञार्थः, फलाभावात् । न च 'सार्वधातुकमपित्' इति ङित्त्वे गुणनिषेधः फलमिति शंक्यम्, श्नमः पूर्वस्य इगन्तस्य अङ्गत्वाभावादेव गुणाप्रसक्तेः । ननु श्नमः प्राक् परत्वाल्लघूपधगुणे कृते पश्चात् श्नमि रोणद्धि इति स्यादित्यत आह—**नित्यत्वाद्गुणं बाधते इति** । कृते अकृते च गुणे प्रवृत्तेः श्नम् नित्यः । तस्मिन् सति लघूपधत्वाभावान्न गुण इति भावः । **रुणद्धीति** । रुनध् ति इति स्थिते 'झषस्तथोः' इति धत्वे णत्वमिति भावः । रुनध् तस् इति स्थिते प्रक्रियां दर्शयति—**श्नसोरल्लोप इति** । क्ङिति सार्वधातुके तद्विधेरिति भावः । रुन्ध् तस् इति स्थिते नस्य णत्वमाशङ्क्य आह—**णत्वस्यासिद्धत्वादिति** । ननु कृते परसवर्णे तस्य नस्य णत्वमस्त्वित्यत आह—**तस्यासिद्धत्वादिति** । परसवर्णसंपन्ननस्येत्यर्थः । नन्विह अल्लोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वात् कथमनुस्वारपरसवर्णावित्यत आह—**न पदान्तेति** । **रुन्द्धः इति** । 'झषस्तथोः' इति धः । **रुन्धन्तीति** । रुणत्सि रुन्द्धः रुन्द्ध । रुणध्मि रुन्ध्वः रुन्ध्मः । **रुन्द्धे इति** । रुन्धाते रुन्धते । रुन्त्से रुन्धाथे रुन्द्ध्वे । रुन्धे रुन्ध्वहे रुन्ध्महे । रुरोध । रुरोधिथ । **अरुणदिति** । लङि हल्ङ्यादिना तिपो लोपः । धस्य चर्त्वविकल्पः । सिपि तु हल्ङ्यादिना लुप्ते 'दश्च' इति रुत्वविकल्पं मत्वा आह—**अरुणत् अरुण इति** । रुन्ध्यात् । रुन्धीत रुत्सीष्ट । इरित्त्वादङ्विकल्पं मत्वा आह—**अरुधत् अरौत्सीदिति** । अङभावे सिचि हलन्तलक्षणा वृद्धिः । लुङस्तङ्याह—**अरुद्धेति** । 'झलो झलि' इति सिज्लोपः ।

अभिदत्—अभैत्सीत् । अभित्त । छिदिर् १४४० द्वैधीकरणे । अच्छिदत्–अच्छैत्सीत् । अच्छित्त । रिचिर् १४४१ विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । रिरिचे । रेक्ता । अरिणक् । अरिचत्—अरैक्षीत् । अरिक्त । विचिर् १४४२ पृथग्भावे। विनक्ति। विङ्क्ते। क्षुदिर् १४४३ संपेषणे । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुदत्–अक्षौत्सीत् । अक्षुत्त । युजिर् १४४४ योगे । योक्ता । उछृदिर् १४४५ दीप्तिदेवनयोः । छृणत्ति । छृन्ते । चच्छर्द । 'सेऽसिचि—' ( सू २५०६ ) इति वेट् । चच्छृदिषे–चच्छृत्से। छर्दिता । छर्दिष्यति–छर्त्स्यति । अच्छृदत्–अच्छर्दीत् । अच्छर्दिष्ट उतृदिर् १४४६ हिंसानादरयोः । तृणत्तीत्यादि । कृती १४४७ वेष्टने । परस्मैपदी । कृणत्ति । आर्धधातुके तौदादिकवत् । ञि इन्धी १४४८ दीप्तौ । अथ आत्मनेपदिनः। (२५४४) **श्नान्न लोपः । ६ । ४ । २३ ॥** श्नमः परस्य नस्य लोपः स्यात् । 'श्नसोरल्लोपः' ( सू २४६९ ) । इन्द्धे । इन्त्से । इन्धिता । इनधै । ऐन्द्ध । ऐन्द्धाः । खिद १४४९ दैन्ये । खिन्ते । खेत्ता । विद १४५० विचारणे । विन्ते । वेत्ता ।

अथ परस्मैपदिनः । शिष्लृ १४५१ विशेषणे । शिनष्टि शिंष्टः शिंषन्ति । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । जश्त्वम् । ष्टुत्वम् । ' झरो झरि —' ( सू ७१ ) इति वा डलोपः । अनुस्वारपरसवर्णौ । शिण्ढि–शिण्ड्ढि । शिनषाणि । अशिनट् । लृदित्वादङ् । अशिषत् । पिष्लृ १४५२ संचूर्णने । शिषिवत् । पिनष्टि । भञ्जो १४५३ आमर्दने । भनक्ति । बभञ्जिथ–बभङ्क्थ ।

---

**भिनत्तीति** । भिन्त्तः भिन्दन्ति । भिनत्सि भिन्त्थः भिन्त्थ । भिनद्मि भिन्द्वः भिन्द्मः । **भिन्त्ते इति** । भिन्दाते भिन्दते । भिन्त्से भिन्दाथे । भिन्द्ध्वे । भिन्दे भिन्द्वहे । बिभेद । बिभेदिथ । बिभिदिव । बिभिदे । बिभिदिषे । **अभिनत् अभिन इति** । 'दश्च' इति रुर्वेति भावः । **अभिन्त्तेति** । लङि तङि रूपम् । लुङः परस्मैपदे आह—**अभिदत् अभैत्सीदिति** । इरित्त्वादङ् वेति भावः । लुङि तङ्याह—**अभित्तेति** । 'झलो झलि' इति सिज्लोपः । अभित्साता-मित्यादि । **उ छृदिरिति** । उकार इत् । 'उदितो वा' इति क्त्वायामिड्विकल्पार्थः । **ञि इन्धी दीप्तौ** । ईदित्त्वं 'श्वीदितः' इत्येतदर्थम् । श्नमि कृते इ न न् ध् ते इति स्थिते—**श्नान्न लोपः** । श्नम्प्रत्ययैकदेशस्य श्न इत्यस्य श्नादिति पञ्चमी । नेति लुप्तषष्ठीकम् । तदाह—**श्नमः परस्य नस्येति** । नकारस्येत्यर्थः । अकार उच्चा-रणार्थः । तथाच इन ध् ते इति स्थिते आह—**श्नसोरल्लोपः इति** । तथाच इन्ध् ते इति स्थिते 'झषस्तथोः' इति तकारस्य धत्वे पूर्वधस्य जश्त्वे परिनिष्ठितमाह—**इन्द्धे इति** । यद्यपि 'अनिदिताम्' इत्येवात्र नलोपः सिध्यति । तथापि अनक्ति इत्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तमिति बोध्यम् । **इन्धते** । इन्द्ध्वे । इ-न्द्धाम् । इन्त्स्व । इन्द्ध्वम् । **इनधै इति** । श्नमि उत्तमस्य इटः एत्वे आटि वृद्धौ

भङ्क्ता । भुज १४५४ पालनाभ्यवहारयोः । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् । तृह १४५५ हिसि १४५६ हिंसायाम् । (२५४५) तृणह इम् । ७ । ३ । ६२ ॥ तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि तृण्ढः ।

---

इन न् ध् ऐ इति स्थिते श्नान्नलोपे आटः पित्त्वेन ङित्त्वाभावात् ' श्नसोरल्लोपः ' इत्यभावे रूपमिति भावः । अत्र नलोपार्थमपि श्नान्न लोप इत्यावश्यकम्, आटः पित्त्वेन ङित्त्वाभावात् ' अनिदिताम् ' इत्यस्याप्रवृत्तेः । इनधावहै । लङ्याह—**ऐन्द्धेति । ऐन्द्धाः इति** । ' झषस्तथोः ' इति थस्य धः । इन्धीत । लुङि ऐन्धिष्ट ।

**शिष्लृ विशेषणे** । अनिट् । **शिशेषिथेति** । अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट् । शिनष् हि इति स्थिते अल्लोपे शिन्ष् हि इति स्थिते आह—**हेर्धिरिति** । शिन् ष् धि इति स्थिते आह—**जश्त्वमिति** । ' झलां जश् झशि ' इति षस्य ड इति भावः । **ष्टुत्वमिति** । धस्य ढ इति भावः । यद्यपि जश्त्वस्यासिद्धत्वात्ततः प्रागेव ष्टुत्वस्य उपन्यासो युक्तः । तथापि जश्त्वं ष्टुत्वमिति प्रक्रियाप्रदर्शनमात्रपरं क्रमस्तु न विवक्षितः । **झर इति** । जश्त्वसंपन्नस्य डस्य लोपविकल्प इत्यर्थः । **अनुस्वारपरसवर्णाविति** । नकारस्य ' नश्च ' इत्यनुस्वारे सति तस्य परसवर्णो णकार इत्यर्थः । ' न पदान्त ' इति निषेधान्नाल्लोपः स्थानिवत् । डस्य लोपपक्षे उदाहरति—**शिण्ढीति** । डस्य लोपाभावे उदाहरति—**शिण्ड्ढीति** । वस्तुतस्तु सानुस्वार एव पाठ उचितः, 'दीर्घादाचार्याणाम् ' इत्युत्तरं ' अनुस्वारस्य ययि परसवर्णः ' ' वा पदान्तस्य ' 'तोर्लि' ' उदः स्थास्तम्भोः पूर्वस्य ' ' झयो होऽन्यतरस्याम् ' ' शश्छोऽटि ' इति षट्सूत्रपाठोत्तरं ' झलां जश् झशि ' ' अभ्यासे चर्च ' ' खरि च ' ' वावसाने ' ' अणोऽप्रगृह्यस्यानुनासिकः ' इति पञ्चसूत्रपाठ इति भाष्यसंमताष्टाध्यायीपाठे परसवर्णदृष्ट्या ' झलां जश् झशि ' इत्यस्य ' झरो झरि ' इत्यस्य चासिद्धत्वेन यय्परत्वाभावे परसवर्णाप्राप्तेरिति शब्देन्दुशेखरे स्थितम् । शिंष्टात् शिंष्टम् शिंष्ट । **शिनषाणीति** । आटः पित्त्वेन ङित्वाभावात् ' श्नसोः ' इत्यल्लोपो नेति भावः । **अशिनडिति** । लङस्तिपो हल्ङ्यादिलोपे षस्य जश्त्वमिति भावः । अशिंष्टाम् अशिंषन् । अशिनट् अशिंष्टम् । अशिंष्ट । अशिनषम् अशिंष्व अशिंष्म ।

**भञ्जो आमर्दने । भनक्तीति** । श्नमि भ न न् ज् ति इति स्थिते ' श्नान्न लोपः ' इति नलोप इति भावः । भङ्क्तः भञ्जन्तीत्याद्यूह्यम् । भारद्वाजनियमात्थलि वेडिति मत्वा आह—**बभञ्जिथ बभङ्क्थेति । भङ्क्तेति** । अनिडिति भावः । **भुज पालनेति** । 'भुजोऽनवने ' इति तङ् वक्ष्यते–भुङ्क्ते

